॥ तुरीयोपनिषत् ॥

कलातीतश्चेति । तन्न चत्वारः । अकारश्चायुतावयवान्वितः । उकारः शतावयवान्वितः । मकारः सहस्रावयवान्वितः । अर्धमात्रप्रणवोऽनन्तावयवान्वितः । सगुणो विराट्प्रणवः । संहारो निर्गुणप्रणवः । उभयात्मक उत्पत्तिप्रणवः । यथार्थकथनोमित्युच्चार्याभिमानोत्पत्तिप्रणवः । सर्वोपसंहारेण संहारप्रणवः । उभयात्मकत्वात् विराट्प्रणवः । उत्पत्तिप्रणवो दीर्घप्लुतविराट् । प्लुतप्लुत्युपसंहारः । विराट्प्रणवः षोडशमात्रान्वितः । षट्त्रिंशत्तत्त्वायुतः । षोडशमात्रात्मकं कथमित्युच्यते । अकारः प्रथमः । द्वितीय उकारः । मकारस्तृतीयः । अर्धमात्रा चतुर्थः । नादः पञ्चमः । बिन्दुः षष्ठः । कला सप्तमः । शक्तिरष्टमी । शान्तिर्नवमी । समाना दशमी । आत्मनैकादश । मनोन्मना द्वादश । वैखरी त्रयोदश । मध्यमा चतुर्दश । पश्यन्ती पञ्चदश । परा षोडश । इति षोडशमात्रात्मकः प्रणवः । षोडशमात्रा जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाभेदैरेकैकमात्राचातुर्विध्यमेत्य । षोडशमात्राश्चतुष्षष्टिभेदमेत्य । पुनश्चतुष्षष्टिमात्राः प्रकृतिपुरुषद्वैविध्यमापाद्याष्टा-विंशत्युत्तरभेदमात्रास्वरूपमासाद्य सगुणनिर्गुणत्वमेत्य एकोपि ब्रह्म प्रणवः ॥

सर्वाधारः परं ज्योतिरेष सर्वेश्वरो विभुः ।
सर्वदेवमयः सर्वप्रपञ्चाधारगर्भितः ।
सर्वाक्षरमयः कालः सदसद्भक्तिवर्जितः ॥ इति ॥

य एवं वेदेत्युपनिषत् ॥

इति तुरीयोपनिषत् समाप्ता ।